श्रीः

श्रीरामवर्णमाला
श्रीरामनक्षत्रमालिका
श्रीजानकीस्तुतिः

इति

# स्तुतित्रयम्.

MYSORE:
PRINTED AT THE G. T. A. PRESS.

1907.

॥श्रीः॥

स्वस्त्यस्तु

# ग्रन्थकर्तुर्विज्ञापना

विदितमेवेदं विदुषां सर्वेषाम्; यत्किल :—शब्दालङ्कार-भूयिष्ठं चित्रकाव्यमधमत्वेन पर्यगण्यत शास्त्रकारैः, अतएव हि श्रीमानकुण्ठमतिर्नीलकण्ठकविः प्रासबन्धं भारतीप्रासो-पहननत्वेन समुदाहरदिति. तथाऽपि (श्लो०) 'साङ्केत्यं पारिहास्यं च स्तोभं हेळनमेव वा। वैकुण्ठनामस्मरणं सर्वा-घौघविनाशनम्' ॥ इति महतां सूक्तिमनुस्मरन् कथंचि-द्भगवत्प्रीतिमपेक्षमाणः प्राथमिकं ग्रन्थद्वयमग्रथयम्. तत्र च मन्दधिषणोऽप्यहमिमान् बन्धनियमानन्वसरम्. तद्यथाः—

प्राथमिके अकारादिहकारान्तवर्णप्रारम्भाणि पद्यानि, द्वितीये तु अश्विन्यादिनक्षत्रनामप्रारम्भाणि तत्तन्नक्षत्रदैवत-पदाङ्कितानि च; स्तोत्रद्वयेऽपि प्रतिपादं द्वितीयाक्षरे नियतः प्रासः, किंच प्रतिपद्यं योवा गणः प्राथमिको भवति, अवशिष्टेऽपि पादत्रये तेनैव प्राथमिकेन भवितव्यमिति.

एवमनुसृतनियमयोरमुयोर्ग्रन्थयोरादिमे ॠ ऌ ॡ ङ ञ ठ ण कारादिशब्दानामसुलभतया तदाद्यानि पद्यानि नैवाऽरच-यम्. अन्यस्मिंस्तु केषांचिन्नक्षत्रपदानां प्रकृतार्थाबोधकतया

केषांचिन्मात्रागणनियमबाधकतया च, अल्पीयांसं विपर्यासं व्यतानिषम्. अन्तिमं तु जानकीस्तवाख्यं ग्रन्थं कमपि बन्धनियममनपेक्षमाणो यथामति व्यरीरचम्.

नियमबहुळत्वान्मन्दबुद्धिनिबद्धत्वाद्वा यदि दृश्येरन्नत्र केचन दोषाः ; तानगणयन्तस्सुगुणगणयन्तश्च तानेव ममाऽप्यनिपुणधिषणस्य प्रबन्धनिबन्धकताजनितेन हर्षप्रकर्षेण, सफलयन्तु मदीयमिमं श्रमं सहृदयाइति सप्रश्रयमभ्यर्थये.

गच्छतः स्खलनं क्वाऽपि भवत्येव मनागपि ।
हसन्ति दुर्जनास्तत्र समादधति सज्जनाः ॥

प्लवङ्ग सं॰ अधिकचैत्र
शुक्लप्रतिपत्,
मैसूर्.

गुण्डशास्त्री,
सद्विद्याशालाध्यक्षः
ग्रन्थकर्ता.

॥ श्रीः ॥

श्रीरामचन्द्रपरब्रह्मणे नमः

आपदामपहर्तारं दातारं सर्वसम्पदाम् ।
लोकाभिरामं श्रीरामं भूयोभूयो नमाम्यहम् ॥

## श्रीरामवर्णमालास्तुतिः

श्रीरामचन्द्र भगवन्
माराशयवालिमुक्तिगतिदायिन् ।
घोरापराधशाली
क्रूरात्माऽहं दृढं प्रपद्ये त्वाम् ॥ १ ॥

अमरावळिहितहेतो
समराहतदनुज ते पदाम्बुरुहे ।
भ्रमरायिताशिरसइमां
मम राम स्वीकुरुष्व नुतिविततिम् ॥ २ ॥

आसुरकृत्यं मामति-
भासुरकीर्तेऽद्य तव कृपया ।
आसुरसम्पन्मुञ्चतु
सा सुरसम्मद् द्रुतं भजतु ॥ ३ ॥

इभवन्मदमलिनोऽहं
न भवन्तमपूजयं क्वचिद्भक्त्या ।
प्रभवत्कर्मगतेर्वत
न भवत्पदतोऽन्यदद्य मम शरणम् ॥ ४ ॥

ईशं त्वां याचेऽहं
पाशं मे च्छिन्धि संसृतेराशु ।
नाऽऽशंसते मनो मम
कोशं कौबेरमप्यधुना ॥ ५ ॥

उरुदुरितं हित्वा मां
पुरुषवराऽन्यो न ते दयापात्रम् ।
सरुजि कृतादगदादिव
विरुजि कृतान्न हि फलं भवेद्भिषजः ॥ ६ ॥

ऊषरगतबीजमिवाऽ-
शेषविधिस्त्वदयां विना विफलः ।
तोषयुतास्तात्त्विकधी-
पोषरतास्त्वां भजन्ति खलु धन्याः ॥ ७ ॥

ऋषिवरजायामुक्तिद
मुषितमार्तं काममुख्यचोरवरैः ।
तृषितमिह भवमरौ मां
द्विषि च दयावांस्त्वमुद्धर क्षिप्रम् ॥ ८ ॥

एवं याचे राघव
नावं संसारसागरस्य त्वाम् ।
भावं त्वयि दिश सुदृढं
भूवं मा त्वयि कदाऽपि विमुखोऽहम् ॥ ९ ॥

ऐशपदं ब्राह्मपदं
श्रीशपदं चाऽहमद्य समुपेक्षे ।
कीशवरसेविताङ्घ्रे
नाशविहीनं तु ते पदमपेक्षे ॥ १० ॥

ओङ्कारबोध्यरूपं
त्वाङ्कारुण्यामृताब्धिमवलम्बे ।
माङ्कार्पण्यनिधिं गत-
पङ्कात्मानं तनुष्व दयया त्वम् ॥११॥

औतववृत्तिं हित्वा
ये तव नामामृतं पिबन्ति विभो ।
पूतवदनाजनास्ते
ऋातव्रतोऽप्युच्चमेव यान्ति पदम् ॥ १२ ॥

करतलगयोगमुद्रं
सुरतरुमूलस्थमवनिजाभद्रम् ।
भरतमुखकुमुदचन्द्रं
परतरमीडे नतावनवितन्द्रम् ॥ १३ ॥

खरमुखरक्षस्समुदय-
खरनखरायुधमिळासुताकान्तम् ।
खरकिरणवंशरत्नं
खरतरदुरितप्रशान्तये वन्दे ॥ १४ ॥

गमनादिशून्यमाहु-
र्मम नाथ त्वां कुतोनु वेदविदः ।
समनाशयत् किल भवा-
नमनागाक्रम्य सर्वरक्षांसि ॥ १५ ॥

घनदुरितभरितइति मां
मनसि कृथामा यतो भवन्नाम्नः ।
मननमघहारि मत्वाऽ-
तनवमहं नित्यमेव दुरिततितिम् ॥ १६ ॥

चण्डो हिनस्त्यरिचयो
दण्डोऽस्मिन् पात्यतां त्वया तूर्णम् ।
चण्डोऽरिषु करधृतको-
दण्डोऽपि च मामुपेक्षसे नु कथम् ॥ १७ ॥

छलयुतदितिसुतघातिन्
बलवियुतं बाधते भृशं माया ।
खलमतिरियं कदाऽपि च
खलयति न भवत्प्रपत्तिबलयुक्तम् ॥ १८ ॥

जयदाय सुरगणस्य
क्षयदायाऽसुरसमूहस्य ।
भयदाय रिपुचयस्याऽ-
भयदाय नमोऽस्तु भक्तनिवहस्य ॥ १९ ॥

झरसदृशं किल माया-
विरहित संसारवर्त्म सत्यमिदम् ।
विरतभयो येन भव-
च्चरणतरिस्थस्तदात्मवित्तरति ॥ २० ॥

टङ्कारो धनुषस्तेऽ-
हङ्कारपरान् परान् निराकुरुते ।
लङ्कापतिं तु बाणै-
स्त्वङ्कारुण्यात् किलाऽवधीस्साक्षात् ॥ २१ ॥

डमरुकरकमलजाद्यै-
रमरवरै रर्चिते रघुप्रवरे ।
मम रतिरस्तु निरन्तर-
ममलपदं तद्यतस्सुखाप्यं स्यात् ॥ २२ ॥

ढक्कानिनदं संसृति-
रुक्कातरभीतिसंहृतिप्रभवम् ।
दिक्कालातिग माया-
दक्कातरहृत् स्मरामि तव नाम ॥ २३ ॥

तनुते यो यज्ञादीन्
वनुते स्वर्गादिभोगभाग्यं सः ॥
ननु ते नामस्मृतिक-
न्मनुते नीचं पदं च वैरिञ्चम् ॥ २४ ॥

थलथलितरुचिशरीरं
छलनविदूरं नमामि रघुवीरम् ।
खलहृतिधीरं तापा-
नलततिनीरं परं महोदारम् ॥ २५ ॥

दवपावको हि सीता-
धवपाद त्वं महाघविपिनस्य ।
भवपाशदाहदक्षो
भव पापहरं धरामि हृदये त्वाम् ॥ २६ ॥

धन्यास्ते खलु मुनयो
वन्याभूत्वा स्मरन्ति ये रामम् ॥
अन्यायजधनधन्यं-
मन्याअन्ये पतन्ति बत मूर्खाः ॥ २७ ॥

नमतां भक्तिमतां त्वं
ममतां सततं छिनत्सि हृदयगताम् ।
मम तां विमतां छित्वा
समतां सर्वत्र देहि मे भगवन् ॥ २८ ॥

पर्यटति भवमरौ रघु-
वर्य भवच्चरणकमलमधुविमुखः ।
हर्यजहरादिलब्धस-
पर्य ततः क्लेशमेति लोकोऽसौ ॥ २९ ॥

फणिता स्तव्यस्य गुणान्
पणिता प्रोच्येत नैव तादृगहम् ।
फणिवाहो त्रिगुणातिग
गुणिमध्ये वर्णयेत कोवा त्वाम् ॥ ३० ॥

बलवानिह धनवानिति
बलवादोऽसौ विमुक्तराज्यस्त्वम् ।
नलवार्धिसेतुमान् कपि-
बलवान् क्षितिकण्टकं यदुदहार्षीः ॥ ३१ ॥

भद्राय नतिमतां गत-
निद्राय नमोऽस्तु रामभद्राय ।
क्षुद्रायमनियमासन-
मुद्रायद्दर्शनाय न भवन्ति ॥ ३२ ॥

मन्मथहतको मानव-
हृन्मथनं तनुतएषयत् सततम् ।
तन्मम न भयं स्मरशम-
कृन्महित त्वां दृढं प्रपन्नस्य ॥ ३३ ॥

यतमानः स्वजनकृते
गतमानं दुरितमाचरन्मनुजः ।
हतमानस्तैस्त्यक्तो
वत मानववंशकेतुमर्थयते ॥ ३४ ॥

रम्यं पुंसामपि हृदि
यम्यं मुनिभिर्नवाम्बुदश्यामम् ।
गम्यं श्रुतिभिर्विगतौ-
पम्यं तं पुण्यकीर्तिमवलम्बे ॥ ३५ ॥

लक्षं कुरु मां दुष्कृति-
दक्षं भगवंस्त्वमेव तव दृष्टेः ।
अक्षं मम खलु रविश-
श्यक्षं त्वां स्पृशतु नाम कथमद्य ॥ ३६ ॥

वन्देऽहं दाशरथिं
सन्देहं नाशहेतुमवमुञ्चन् ।
विन्देहन्त्रीमिन्द्रिय
वृन्देहायास्तदीयशुभवीक्षाम् ॥ ३७ ॥

शस्तं पापिचये मां
स्वस्तं त्वत्पादपद्मपूजनतः ।
हस्तं दत्वा भृशमा-
यस्तं द्रागनुगृहाण दाशरथे ॥ ३८ ॥

पण्डं ब्रह्म किल श्रुति-
षण्डं यत् प्राह तन्मृषा भगवन् ।
चण्डं प्रसौति यज्जग-
दण्डं सान्निध्यतोऽपि तत्र माया ॥ ३९ ॥

सर्वाघौघहरं तं
शर्वादिपदं नताय वितरन्तम् ।
अर्वाग्वचोतिदूरं
निर्वाणकरं नमामि रघुवीरम् ॥ ४० ॥

हरणं विपदां सुमनो-
हरणं जगतां शुभप्रदानचणम् ।
तरणं भवनीरनिधेः
शरणं गच्छामि रघुपतेश्चरणम् ॥ ४१ ॥

नरसिंहेन श्रीरघु-
वरकृपया विरचिता भृशं भक्त्या ।
श्रीरामवर्णमाला-
स्तुतिरियमानन्ददा सतां जीयात् ॥ ४२ ॥

॥ श्रीः ॥

श्रीरामचन्द्रपरब्रह्मणेनमोनमः

# श्रीरामनक्षत्रमालिकास्तुतिः

(अस्मिन् स्तोत्रे अधोरेखाङ्कितानि पदानि तत्तन्नक्षत्रदैवतानि सूचयन्ति.)

---

अश्वगजाद्यनपेक्षो
विश्वमरक्षत् सुखेन यो रामः ।
नश्वरसुखनिर्विण्ण-
श्शाश्वदमुं नौमि दस्रनिभदेहम् ॥ १ ॥

भरणीयोहं भवता
शरणीकृततावकीनपदपद्म : ।
करणीयमतिविहीनो
धरणीतनुजापते यमत्रस्तः ॥ २ ॥

कृत्तिकयाऽऽच्छादितम-
प्यात्ति हि कोपाग्निरपिच कामारिम् ।
तत्तिमिरपथे भगवन्
वृत्तिमिमां शमयतु त्वदीयदया ॥ ३ ॥

रोहितगुणजनचरिते
नो हितमस्ति प्रजेश पथि सत्यम् ।
पाहि तदधुना माम-
त्याहितलग्नं त्वमेव करुणाब्धे ॥ ४ ॥

मृगशीर्षधरवपुः प-
न्नगराजशयः पयःपयोधिगृहः ।
खगराजरथश्शाखा-
मृगसैन्योऽप्राकृतस्सरक्षतु माम् ॥ ५ ॥

आर्द्रान्तरमपि न त्वां
द्रीर्द्राक् कथमेति मय्युदासीनम् ।
गीर्द्राक्षातुल्याऽपिच
नार्द्रास्तनुतां तु रौद्रजनवृत्तीः ॥ ६ ॥

न पुनर्वसुभोगचये
विपुले तृष्णां विधेहि भगवन्मे ।
चपुरेतन्मम मलिनं
अपुनीह्याशु त्वमदितिसुतवन्द्य ॥ ७ ॥

पुष्यसि यं स्वकटाक्षैः
श्लिष्यति लक्ष्मीरमुं महोत्कण्ठा ।
रुष्यसि यस्मै देवाऽ-
मुष्य मुहुः क्लेशएव जीवस्य ॥ ८ ॥

आश्लेषाल्लब्धसुखं
विश्लेषाल्लब्धदुःखमबलायाः ।
त्वं श्लेष्मगकीटसमं
विश्लेषय मां भवाहिसंदंशात् ॥ ९ ॥

मखमुखकरणाशक्ता-
अखरधियो नुतिभिरानतारामम् ।
मखसुखिऋषिपितृऋणतो
न खलु भयं प्राप्नुवन्ति तद्भक्ताः ॥ १० ॥

पूर्वे फल्गुनि वर्त्मनि
सर्वं जगदेतदविरतं गत्वा ।
मर्वन्तइव मृगस्तत-
उर्वन्नूचति दुःखमेव भगकुलज ॥ ११ ॥

उत्तरफल्गुनि वर्त्म-
न्युत्तर सरतस्त्वमेव मेऽघ्रकथम् ।
उत्तरकाष्ठार्यम्णो-
प्युत्तरकाष्ठं न हंसि तापचयम् ॥ १२ ॥

हस्तं निधाय शीर्षे
कस्तं भजतां जनो न भक्तनिधिम् ।
न्यस्तं हस्ते च्छत्रं
शस्तं हित्वा क एतु रवितापम् ॥ १३ ॥

चित्रमिदमनुगृहीतं
क्षत्रकुलं जन्मना त्वयेति विभो ।
तत्र सतो जन्म कथं
यत्र पदे त्वष्टृकौशलं विफलम् ॥ १४ ॥

स्वातिगमे वलते किल
वाति नभस्वति चलः प्रदीपइव ।
द्योतितदिगन्तकीर्ते
नैति खलस्त्वां तथाऽपि वत शरणम् ॥१५॥

सविशाखवृक्षसदृशो
भुवि यो वेदस्य वेद नाऽर्थं त्वाम् ।
अवितुं तं न समर्था-
रविचन्द्रमुखा न चेन्द्रवह्निमुखाः ॥ १६ ॥

अनुराध गोपनन्दन
ननु दाशपतिं त्वमातनोर्मित्रम् ।
मनुजावतारसदृशं
तनुषे नेदं विचित्रं स्यात् ॥ १७ ॥

ज्येष्ठं रक्षितुमिन्द्रं
प्रेष्ठं यो वर्णिरूपमादत्त ।
गोष्ठं प्राप च करुणा-
निष्ठं तं दीनवत्सलं वन्दे ॥ १८ ॥

मूलं पापस्य क्षय-
कालं पुण्यस्य जानकीजाने ।
नाऽलं नैर्ऋतसमम–
श्रीलं मामवितुमद्य भवदन्यः ॥ १९ ॥

पूर्वमहो जलनिधि गत-
पर्वतवर्यं किलोद्दधार भवान् ।
सर्वभरं निदधे त्वयि
दुर्वचदुःखाम्बुधौ निमग्नोऽहम् ॥ २० ॥

उत्तरदिशाधिपाद-
प्युत्तमवित्तानि नैव लिप्सेऽहम् ।
यत्तव पदभजनान्मम
वृत्तमिहाऽऽतनुयुरव्ययवाविश्वे ॥ २१ ॥

श्रवणं रामकथायाः
सवनादिभ्योऽतिरिच्यते नृणाम् ।
अवनं कुरुते यदनिश-
मवनीदुहितृप्रियाकृतिर्विष्णुः ॥ २२ ॥

धनितामजस्रदुःखां
न नितान्तं प्रार्थयस्व वसुकामः ।
वनिता भव भोमानव
वनितासहितं हितं सदा रामम् ॥ २३ ॥

शततारानुगतेन च
हततारेशाऽनुगम्यते न भवान् ।
नततापापहृतावपि
पतता वरुणालयेऽमृतकरेण ॥ २४ ॥

पूर्वं भद्र त्वं किल
शार्वं द्रष्टुं हि नाऽशकः पादम् ।
खर्वं वचस्तदखिलं
सर्वं यदजैकपादगमवार्षीः ॥ २५ ॥

उत्तरभद्रं सुलभं
सत्तमनामस्मृतां यतः काश्याम् ।
मत्तहृदामपि मुक्तिद-
मुत्तममनुमुपदिशत्यहिर्बुध्न्यः ॥ २६ ॥

रेऽवति नर रामे त्वां
नाऽवनिवलये भयं कुतोऽपि तव ।
तावदिदं भाति तमो
यावदयं नोदयं भजेत्पूषा ॥ २७ ॥

बुधहृदयालङ्कृतये
ग्रथितां नक्षत्रमालिकामेनाम् ।
नरसिंहो भक्तियुत-
स्समर्पयत्यत्र सच्चिदानन्दे ॥

वृत्तं नैव प्रकृतिसुभगं न प्रसादो न चौजो
नाऽपि च्छन्दो मृदु न सदलङ्कारयोगस्तथाऽपि।
मादृक्षाणां सततसुलभां सोऽहमाश्रित्य मन्द:
तामेवाऽऽर्यामतनवमिमां सन्नुतिं राघवस्य ॥

॥ श्रीः ॥

श्रीरामचन्द्राय परब्रह्मणे नमोनमः

# श्रीजानकीस्तुतिः

वन्देऽहं रघुनायकप्रणयिनीं भक्त्या महत्या युतः
कारुण्यैकनिधिं स्वभक्तजनतातापत्रयध्वंसिनीम् ।
वात्सल्यं सततं शरीरिषु दृढं सन्दर्शयन्तीं मुहुः
गाढाज्ञाननिवारिणीं सुकृतिनां विज्ञानसम्पत्प्रदाम् ॥

भगवति मिथिलेश्वरात्मजाते
मम नुतिमप्यनुकम्पया गृहाण ।
गुणमगुणमपि स्वभक्तलोके
न विमृशसीति हि सूरयो वदन्ति ॥ १ ॥

स्तवस्तवाऽयं हि मयि स्थितोऽपि
स्वाद्यस्सतां स्याद्भवतीमहिम्ना ।
क्षीरं किमास्वाद्यतमं न मातः
मृद्भाजनस्थं विमलाशयानाम् ॥ २ ॥

अम्बाऽत्र मास्तु कविसम्भ्रमविभ्रमस्य
जिज्ञासया मम कृतौ तव खेदलेशः ।
यस्मात् समस्तविदुषी सकलात्मिका त्व-
मत्यन्तमन्दधिषणस्तनुसम्भ्रमोऽहम् ॥ ३ ॥

दत्वा गिरं पूर्वमिळात्मजे मे
ततस्समाकर्ण्य भजस्व तोषम् ।
अभ्यास्य कीरं स्वयमेवलोकः
ततस्समाकर्ण्य न मोदते किम् ॥ ४ ॥

गिरो मे श्रुत्वैव त्वमिह भव सन्तोषविवशा
न खल्वासामर्थं क्वचिदपि समालोचय मनाक् ।
भृशं दुष्टामर्थे जननि बहुनीचामपि गिरं
सवित्री श्रुत्वैव प्रमुदितमनाः किं न भवति ॥ ५ ॥

स्तोत्रं तदाह ननु देवि मनीषिलोक-
आरोप्यते गुणगणो यदविद्यमानः ।
स्तोतृत्वमेव मम मूढमतेर्न हि स्यात्
यन्नाऽऽप्यते गुणलवोऽपिच नाऽऽश्रितस्त्वाम् ॥ ६ ॥

वाञ्छा भवेद्यदि नताघनिहन्त्रि कीर्तौ
तद्दीनदीनमशरण्यमव स्वयं माम् ।
एवं हि देवि निरुपाधिकृपापयोधि-
स्त्वं गीयसे जगति जानकि नाऽन्यथैव ॥ ७ ॥

विज्ञापयामि भवतीं विरहं नितान्तं
मत्तो न कश्चन भवेत् करुणापदं ते ।
दुःखाधिकं हि करुणापदमामनन्ति
दुःखान्यजोऽसृजदिहाऽम्ब ममैव हेतोः ॥ ८ ॥

नास्त्येव वा मयि दया तव लोकनाथे
तामामनन्ति परदुःखहृतौ किलेच्छाम् ।
त्वन्नामसंस्मरणतः स्वयमेव नष्टे
दुःखे कथं नु करुणां कुरुषे मयि त्वम् ॥ ९ ॥

मम श्रेयोलाभस्सवितृकुलनाथप्रियतमे
तवैव स्यात् कृत्यं न मम न परेषां च नियतम् ।
सुतश्रेयश्चिन्तां जगति यदि माता न कुरुते
किमन्यस्तां कुर्यात् किमथ च न गर्ह्येत जननी ॥ १० ॥

ममाऽम्ब शोभाजननं प्रकामं
मुदे तवैवेदमहं न याचे ।
शिशुर्न वाञ्छेत् किल भूषणानि
तथाऽपि मात्रा स्वमुदे विभूष्यः ॥ ११ ॥

नाऽन्यत्र गच्छामि धरातनूजे
निराकृतस्सन्नपि च त्वयाऽहम् ।
को नाम राज्यासनविच्युतोऽपि
भृत्यत्वमिच्छेदिह मानशाली ॥ १२ ॥

प्रवर्धमानान् बहुशोऽपराधान्
क्षाम्येति वक्तुं न हि सांप्रतं त्वाम् ।
क्षमामृतस्त्वं सहधर्मिणी य-
दुत्पत्तिदेशोऽपि तव क्षमैव ॥ १३ ॥

कामाद्यष्षडरयो भुवनैकनाथे
कर्षन्ति दासमपि मां पुरतो भवत्याः ।
त्वं सर्वलोकभयहारिकराङ्किताऽपि
नो लज्जसेऽपि कथमेतदवेक्षमाणा ॥ १४ ॥

गर्ते पतन् क्वचन कश्चन बालकोऽपि
प्रीत्या जनैरपि समुद्ध्रियते तटस्थैः ।
संसारवारिधिनिमग्नमपि स्वयं मां
त्वत्प्रेमपुत्रमपि नोद्धरसीत्ययुक्तम् ॥ १५ ॥

भवतीमवेत्य पतितैकपावनीं
वितनोम्यहं तदनुसारि केवलम् ।
वहु कर्मवृन्दमिह भूसुतेऽन्वहं
विमुखत्वमेहि न कदाऽप्यतो मयि ॥ १६ ॥

निरुपाधिकां तव कृपां विचिन्तयन्
परिपूजये न भवतीं कदाऽप्यहम् ।
अतएव नो समुचितं निरीक्षितुं
तव यावदर्चनमिति प्रबोधये ॥ १७ ॥

अहमेव दोषपरिपूरितो मुधा
परिदूषयामि भवतीं गुणालयाम् ।
शुचिरेव शङ्खइह पित्तदूषितैः
परिदृश्यते न किमु पीतरूपभाक् ॥ १८ ॥

अथवैषएव मम दोषइत्यहं
समवैम्यपारकरुणालयाशये ।
वहुपुण्यपूगरहितात्मनां मनाक्
तत्र संस्मृतिश्च सुलभा न सम्भवेत् ॥ १९ ॥

केचित् समाधिविधिभिः क्रतुभिश्च केचि-
दन्ये च पूर्तनिवहैर्भवतीं यजन्ते ।
सर्वेषु तेषु सुतरामसमर्थएष-
त्वां केवलं जननि चेतसि संस्मरामि ॥ २० ॥

भक्त्या नमन्ति भवतीं शुचिमानसाये
तेषां ललाटफलके लिखितां विधात्रा ।
सम्मार्ष्टि नैकजनिलग्नदुरक्षरालिं
त्वत्पादपङ्कजरजोनिकरो नितान्तम् ॥ २१ ॥

त्वदीयपादाब्जरसज्ञचित्ताः
नाऽन्यत् प्रवाञ्छन्ति हि भक्तलोकाः ।
जायेत किं कस्यचिदम्ब वाञ्छा
रसालतृप्तस्य हि निम्बकेषु ॥ २२ ॥

त्वां भक्तलोकावनबद्धदीक्षां
विहाय गच्छेच्छरणान्तरं यः ।
मातस्सुधां हस्तगतां विहाय
मरौ तृषाऽन्विष्यति सोऽल्पमम्भः ॥ २३ ॥

वेधास्सन्ततवेदशीर्षपठनैः प्रीतिं परां प्राप्नुते
विष्णुस्सोऽपि पयोधिमध्यशयने निद्रासुखं सेवते ।
शर्वस्सोऽपि नटन् कळत्रसविधे सन्ध्यासु सम्मोदते
निध्यायाऽखिललोकरक्षणचणां त्वां सर्वलोकेश्वरि ॥ २४ ॥

पञ्चत्वं दधते हि ते सुरनगाजाड्यं सचिन्तामणि-
र्धेनुस्सा पशुतां सदैव तदहं कस्मिन् व्रजान्यर्थिताम् ।
इत्थं चेतसि चिन्तयन्ननुदिनं त्रैलोक्यनाथप्रिये
त्वत्पादद्वितयं व्रजामि शरणं मां पूर्णकामं कुरु ॥२५॥

विच्छिन्नबोधमयरश्मिरिळातनूजे
संप्रेरितो विषममानससादिना च ।
दर्पान्धइन्द्रियतुरङ्गचयो मयाऽयं
बद्धस्त्वदीयपदमञ्जुळमन्दुरान्ते ॥ २६ ॥

मया विक्रीतस्ते पदकमलसेवाविधिकृते
मनोबालो लब्धुं भगवति दयामूल्यमधिकम् ।
त्वमेवाऽर्हस्येनं परिचरणदक्षं कलयितुं
मदीयं मूल्यं मे झडिति वितराऽपारकरुणे ॥ २७ ॥

मोहाख्योऽयं दुस्तरो वारिराशी-
रागग्राहोऽप्यापदावर्तचक्रः ।
मन्दंमन्दं कार्श्यमभ्येत्वजस्र-
मापीतस्त्वन्नेत्रयुग्माञ्जलिभ्याम् ॥ २८ ॥

आगांसि मे प्रतिदिनं बहुळीभवन्ति
नूनं तथाऽपि न तु तानि विधेहि चित्ते ।
प्राणी भवेदिह न कश्चन नाऽपराधी-
त्युक्त्वा त्वया न किममोचिषताऽसुरौघाः ॥ २९ ॥

त्वयाऽखिलनियामिके समुपदिष्टएवाऽध्वनि
स्वयं विचरतोऽस्ति मे नहि हिताहितावेक्षिता ।
कदाऽपि मम बन्धनं क्वचिदपि प्रजायेत चेत्
तदा प्रतिभवस्यदोविघटने त्वमेव ध्रुवम् ॥ ३० ॥

सुतस्ते कामोऽयं त्वमिव हृदये ध्येयइति तं
विजानन्नेवाऽम्ब स्मरणपदवीं प्रापयमहम् ।
इदानीं खल्वेषस्मृतिमपि भवत्याहरति मे
त्वमेव त्वत्पुत्रं झडिति मम चित्तादपनय ॥ ३१ ॥

सुतप्रीत्या यद्वा प्रभवसि न कामं मम हृद-
स्समाक्रष्टुं मातस्तव न किमहं प्रेमतनयः ।
अथो तत्रैव त्वं प्रकटयसि चेत् प्रेम बहुळं
भृशं कामायस्तं मम हृदयमेवाऽऽशु दळय ॥ ३२ ॥

असौ लोकः कामं वहुधनयुतोऽप्यल्पतमतो
धनत्यागादेवाऽश्नुतइह महाभोगनिवहान् ।
कृते सर्वत्यागेऽप्ययि जननि दृष्टः करुणयाऽ-
प्यवस्थानं भक्तस्तव तु भजते केवलतया ॥ ३३ ॥

स्वयं कृत्वा कर्माण्यपि च बहुशो बन्धजनका-
न्यहं कर्ता नाऽस्मीत्यपलपति यो मोचयसि तम् ।
अकृत्वैकं कर्माऽप्यभिदधति सत्यं न कृतमि-
त्यहो किं मय्येवं कलयसि दृढं बन्धनिवहम् ॥ ३४ ॥

धिङ्मूर्ख जाल्म बहुधा किमु जल्पसीति
मा धिक्कुरु त्वमिह मां यदयं समस्तः ।
दोषस्तवैव ननु मातरवेक्षसे य-
मीषद्दृशा सचतुरस्सधनी सवाग्मी ॥ ३५ ॥

परिगर्हयन्तमखिलेशि सन्ततं
यदि कोपभाजनममुं तनोषि माम् ।
करुणागुणैः कलय बन्धनं मम
प्रबलागसं हि न कदाऽपि मर्षयेत् ॥ ३६ ॥

यदि स्याद्वाञ्छा ते मम बहुळजल्पानतिकटून्
जवाद्दूरीकर्तुं श्रवणपदवीतो भगवति ।
प्रसादैरेनं मां झडिति वशयाऽत्यन्तमुखरं
न तावत्पर्यन्तं जननि विरमामि क्षणमपि ॥ ३७ ॥

त्वमेव सन्दर्शय ते पतिं मां
नैवाऽन्यथा मे सभवेत् सुदर्शः ।
आहुर्यतो वेदशिरोविदस्त्वा-
मादर्शरूपां जगतोऽखिलस्य ॥ ३८ ॥

काकव्ययासहनवह्निसमाश्रयाद्यैः
सन्दर्शितं तव चरित्रमवेक्ष्य नूनम् ।
अम्बाऽऽलपन्ति ननु विष्णुमनोनुकूले-
त्येवं हि ते गुणभरं श्रुतयो नितान्तम् ॥ ३९ ॥

किं विश्वस्युरिमां श्रुतिं च विबुधाइत्येवशङ्कोऽनिशं
स्वातन्त्र्यं हि तवाऽऽमनन्ति कतिचिन्मातस्तदास्तामिदम् ।
नो हन्तव्यइहाऽपराधरहितः प्राणी त्वया कथ्यने-
त्यादावेव वनप्रवेशसमये द्रागन्वशास्त्वं पतिम् ॥ ४० ॥

प्रत्यक्षे भवति शिवे पदाम्बुजे ते
किं कार्यं तदितरतोऽनुमानलभ्यात् ।
मातस्त्वामतउपमानबाह्यभूतां
स्तोतुं मे कथमिव कल्पतेऽद्य शब्दः ॥ ४१ ॥

प्रत्यक्षे तव महिम-
न्येषसपक्षस्तथैवच विपक्षः ।
इति मतिरपैति विदुषां
ते श्रितगुरुविग्रहास्तदपि चित्रम् ॥ ४२ ॥

अव्याप्तितोऽसम्भवतोऽपि मुक्ता
दया विदोषा तव युक्तमेतत् ।
असावतिव्याप्तिगताऽपि दोष-
शून्यैर्यते सद्भिरिदं तु चित्रम् ॥ ४३ ॥

अद्वन्द्वमप्यकारक-
मितत्तत्पुरुषं धृताव्ययीभावम् ।
बहुव्रचनीयोपेतं
सद्वृत्तिमकर्मधारयं कुरु माम् ॥ ४४ ॥

यस्मिन्नतिसुलभाः स्यु-
र्भक्तानां प्रत्ययागमादेशाः ।
गुणवृद्धिकरं भगवति
सद्व्याकरणं भजामि तव चरणम् ॥ ४५ ॥

यच्छब्दरूपरहितो
विहितस्त्रीप्रत्ययो विधातुश्च ।
भक्त्या भजति पदं तव
तत्र कृत्यं तद्धिताधिकाराद्यम् ॥ ४६ ॥

उत्सर्गादपवादो
गरिष्ठइति शास्त्रकृद्वचः स्मृत्वा ।
भगवत्युत्सर्गं मम
माकार्षीर्यत्ततोऽपवादस्स्यात् ॥ ४७ ॥

मानेषु सत्स्वपि चतुर्ष्विह सम्मतेषु
कस्मात् पतञ्जलिरसावुपमानमौज्झत् ।
इत्येषसम्प्रति मया विशयो निरासि
त्वां पश्यता निरुपमानकृपां नितान्तम् ॥ ४८ ॥

कीटोऽपि कश्चिदधिगच्छति षट्पदत्वं
ध्यानादिति प्रवचसो ननु युक्तमाहुः ।
येनाऽम्ब हंसकपदं पदसारसं ते
ध्यायन्नुपैति परहंसपदं त्वदीयः ॥ ४९ ॥

शास्त्रज्ञानपराः प्रतीयुरमृतं केचित्तमोनिर्हृतिं
दुःखध्वंसमथाऽपरे तदितरे त्वानन्दरूपस्थितिम् ।
आस्तामेतदथाऽपि शास्त्रधिषणाहीनान्तरोऽहंपुन-
र्यत् त्वत्पादनिषेवणं जनकजे मन्ये तदेवाऽमृतम् ॥ ५० ॥

विद्या सा किल विद्यतां मधुमती भूत्वाऽपि या योगिनां
प्रत्यर्थीभवति स्वयं सदमृतप्राप्त्येकनिष्ठात्मनाम् ।
युक्तं सा मधुहृत्सधर्मिणि जवाद्दूरं त्वयाऽपोहिता
भक्तानाममृतप्रदा त्वमसि यच्छ्रव्यं तवैवाऽम्ब तत् ॥५१॥

विकासं प्राप्तायां त्वयि जगदिदं भानमयते
पुनस्सङ्कोचात्ते जननि न हि दृश्येत किमपि ।
अतस्त्वं सर्वेषां जनिनिधनकर्त्री जनिमतां
मुधा प्राहुष्वण्डं किमपि जगतां कारणतया ॥ ५२ ॥

वराकोऽयं वाञ्छेदभिलषितसाहस्रमिति तु
प्रकामं माभूत्ते मनसि भयलेशोऽपि जननि ।
त्वदीयं जानानो महिमगरिमाणं क्षितिसुते
प्रसादात्ते किंचित् परमिह न याचे ध्रुवमहम् ॥ ५३ ॥

यद्वस्तु त्रिषु समयेषु बाधशून्यं
तत्राऽपि प्रकटयसीह नास्तिवादम् ।
तेन त्वामहमनिशं प्रणम्य याचे
मत्प्रार्थ्येऽपि च तव माऽस्तु नास्तिवादः ॥ ९४ ॥

यदि त्वं मत्कृत्यं मनसि कलयन्ती मदुचितं
फलं दत्से तत् स्वीक्रियतउरुपापेन न मया ।
भवत्यायद्दातुं समुचितमथो तद्दिशसि चेत्
प्रसादं ते भक्त्या शिरसि कलयाम्यन्वहमहम् ॥ ९५ ॥

प्रवृत्तास्संस्तोतुं तव गुणलवं पण्डितवराः
पठन्तस्तान् वेदानवहितधियोऽपि प्रकृतितः ।
नितान्तं तान्तास्याभगवति भजन्तेऽनवरतं
श्रुतीनामेवाऽन्तं न तु तव गुणानामिह मनाक् ॥ ९६ ॥

भगवति न मे नेत्रं क्षिप्रं दहेत् सगरात्मजान्
न भजति समुत्पत्तिं पादे नचैव शृणोत्यपि ।
अपि कथमहं संस्तोतुं त्वां भजाम्यधिकारितां
श्रुतिरपि जगौ यस्यास्तत्त्वे विवेक्तुमशक्यताम् ॥ ९७ ॥

गुणवियुतमरूपं स्तोतुमीष्टे हि कश्चित्
कथमपि ननु वस्तु ब्रह्मशब्दाभिधेयम् ।
निखिलगुणमयीं त्वां दर्शितानेकरूपां
निगदितुमसमर्थः प्राह वेदस्तटस्थः ॥ ९८ ॥

त्रयएव हि ते गुणाइतीह
प्रथमं प्रायतिषि स्तवे तवाहम् ।
अधुनाऽन्तमजानतो गुणानां
मम तूष्णींस्थितिरेव युज्यतेऽम्ब ॥ ५९ ॥

इमानि मद्वाक्यपृषन्ति गत्वा
गुणामृताब्धे तव कर्णशुक्तिम् ।
ततश्च मुक्ताफलरूपमेत्य
हृदि प्रतिष्ठां सुदृशां भजन्तु ॥ ६० ॥

श्रीजानकीस्तुतिमिमां रचितां मयाश्री-
सीतापदाब्जयुगळार्पितमानसेन ।
कारुण्यपूर्णहृदयारघुनाथजाया
प्रीत्या मयीह नितरामुररीकरोतु ॥

लब्ध्वा वेदं तदन्तं तदवयवचयं किंच सत्काव्यरीतिं
सर्वं तत् सार्थयन्ति क्रतुमुखसदनुष्ठानवन्तो महान्तः ।
सर्वेष्वेतेष्वशक्तः कथमपि भगवत्प्रीतिमेवेहमानः
स्तोत्राण्येतान्यकार्षं तदिह मयि भृशं सोऽस्तु देवः प्रसन्नः ॥

वेदवेदान्तवेद्याय मेघश्यामलमूर्तये ।
पुंसां मोहनरूपाय पुण्यश्लोकाय मङ्गळम् ॥

॥ ॐ तत् सत्॥